"अचो ञ्णिति" इति वृद्धौ रपरत्वे 'स्मारम्' इति जाते "नित्यवीप्सयोः" इति द्वित्वे कृदन्तत्वात् सौ "कृन्मेजन्तः" इत्यव्ययत्वात् "अव्ययादाप्सुपः" इति सुपो लुकि मस्यानुस्वारे 'स्मारं स्मारं नमति शिवम्" इति सिद्धम्।

राजानति—

राजेवाचरतीति विग्रहे 'राजन्' इति प्रातिपदिकात् "सर्वप्रातिपदिकेभ्यः क्विब्वा वक्तव्यः" इति क्विपि क्विपो लुकि, प्रत्ययलक्षणेन क्विबन्तत्वात् "सनाद्यन्ता धातवः" इति धातुसंज्ञायाम् "अनुनासिकस्य क्विझलोः क्ङिति" इत्यनेन उपधादीर्घे 'राजान्' इति जाते तस्माल्लटस्तिपि शपि अनुबन्धलोपे 'राजानति' इति सिद्धम्।

द्व्यङ्गुलम्—

द्वे अङ्गुली प्रमाणमस्येति विग्रहे "तद्धितार्थे द्विगुसमासे "प्रमाणे द्वयसज्दघ्नञ्मात्रचः" "द्विगोर्नित्यम्" इति लुकि सति 'द्व्यङ्गुलि' शब्दात् "तत्पुरुषस्याङ्गुलेः संख्याव्ययादेः" इत्यनेन समासान्ते अचि तस्मिन्परे "यस्येति च" इति इकारलोपे समासत्वात् सौ अमादेशे 'द्व्यङ्गुलम्' इति।

राजन्यः—

राज्ञोऽपत्यमिति विग्रहे "राजश्वशुराद्यत्" इति जातिवाचिनो राजन् शब्दात् यत् प्रत्यये भसंज्ञायां "नस्तद्धिते" इति प्राप्तस्य टिलोपस्य "ये चाभावकर्मणोः" इति प्रकृतिभावे तद्धितान्तत्वात् सौ विभक्तिकार्ये 'राजन्यः' इति सिद्धम्।

पटपटाकरोति—

'पटत्' शब्दात् डाचिविवक्षिते "डाचि बहुलं द्वे भवतः" इति द्वित्वे "अव्यक्तानुकरणाद् द्व्यजवरार्धादनितौ डाच्" इति डाचि प्रत्यये "नित्यमाम्रेडिते डाचीति वक्तव्यम्" इति वार्तिकेन पूर्वपटत्सम्बन्धिनस्तकारस्य पररूपत्वं विधाय 'पट पटत् डा' इति जाते डित्वाट्टिलोपे प्रातिपदिकसंज्ञायां सौ विभक्तिकार्ये 'पटपटाकरोति' इति।

मदीयः—

मम अयं 'मदीयः' इत्यत्र "युष्मदस्मदोरन्यतरस्यां खञ्च" इति सूत्रेण चाच्छे सुपो लुकि छस्य ईयादेशे "प्रत्ययोत्तरपदयोश्च" इत्यनेन अस्मदोर्मपर्यन्तस्य मादेशे 'म अद् ईय' इति जाते "अतो गुणे" इति पररूपे विभक्तिकार्ये च कृते 'मदीयः' इति।

म्रदिमा—

मृदोर्भावः म्रदिमेत्यत्र "पृथ्वादिभ्य इमनिज्वा" इति इमनिच्प्रत्यये इकारचकारयोर्लोपे 'मृदु इमन्' इति जाते "र ऋतो हलादेर्लघोः" इति ऋकारस्थाने रकारे 'यचि भम्" इति भसंज्ञायां "टेः" इति दकारोत्तरवर्ति उकारस्य लोपे 'म्रदिन्' इति जाते प्रातिपदिकत्वात् सौ "सर्वनामस्थाने चाऽसम्बुद्धौ" इति उपधादीर्घे हल्ङ्यादिलोपे नलोपे 'म्रदिमा' इति जातम्।

### समिधिता—

समिधमात्मन इच्छति इत्यर्थे "सुप आत्मनः क्यच्" इति क्यचि धातुसंज्ञायां "सुपो धातुप्रातिपदिकयोः" इति सुपो लुकि कचयोर्लोपे "नः क्ये" इति नियमेन पदत्वाभावात् जश्त्वाभावे 'समिध्य' इति क्यजन्तस्य धातुत्वात् लुटि तिपि "स्यतासी लृलुटोः" इति तासौ 'समिध् य तास् ति' इति जाते "लुटः प्रथमस्य डारौरसः" इति तिपो डात्वे डित्वसामर्थ्याद् अभस्यापि टेर्लोपे तासः आर्धधातुकत्वादिटि 'समिध् य इ ता' इति जाते "क्यस्य विभाषा" इति विभाषया यलोपे प्राप्ते "अलोऽन्त्यस्य" इति परिभाषां प्रबाध्य "आदेः परस्य" इत्यनेन यकारस्य लोपे "अतो लोपः" इत्यनेन अकारस्य च लोपे 'समिधिता' इति। क्यचो लोपाभावे 'समिध्यता' इति भवति।

### आरित—

'ऋ गतौ' इति धातोः भावकर्मणि लुटि "भावकर्मणोः" इत्यात्मनेपदे तप्रत्यये "स्यतासी लृलुटोः" इति। तासि प्रत्यये "लुटः प्रथमस्य डारौरसः" इत्यनेन तस्य डात्वे "डित्वसामर्थ्याद् अभस्यापि टेर्लोपः" इति तासष्टेर्लोपे 'ऋ ता' इति जाते "स्यसिच्सीयुट्तासिषु भावकर्मणोरुपदेशेऽज्झनग्रहदृशां वा चिण्वदिट् च" इति सूत्रे उपदेशग्रहणात् इटि चिण्वद्भावे च जाते "अचो ञ्णिति" इति वृद्धौ रपरत्वे 'आरिता' इति।

### पच्यते फलम्—

'कालः फलं पचति' इत्यत्र यदा सौकर्यातिशयं द्योतयितुं कर्तृव्यापारो न विवक्ष्यते, तदा कर्मण एव कर्तृत्वात् पच्धातुरकर्मकः। तस्मात् "लः कर्मणि च भावे चाऽकर्मकेभ्यः" इति कर्तृरूपेऽर्थे वर्तमानक्रियायां "वर्तमाने लट्" इति लटि "कर्मवत्कर्मणा तुल्यक्रियः" इति कर्मवद्भावात् आत्मनेपदे तप्रत्यये "सार्वधातुके यक्" इति यकि अनुबन्धलोपे "टित आत्मनेपदानां टेरे" इति एत्वे 'पच्यते' इति कर्तरि लकारे कर्तुरुक्तत्वात् कर्तृवाचकफलशब्दात् प्रथमा।

### उच्छूनः—

'टुओश्वि गतिवृद्ध्योः' इति धातुः। अत्र टुरोकारश्चेत्। ततश्च उत्पूर्वक-श्विधातोः भूतार्थे "निष्ठा" इति सूत्रेण निष्ठाप्रत्यये प्राप्ते, का नाम निष्ठा इति जिज्ञासायां "क्तक्तवतू निष्ठा" इति निष्ठासंज्ञा क्तक्तवतोरिति उभयोः प्राप्तौ, "तयोरेव कृत्यक्तखलर्थाः" इति क्तप्रत्यये अनुबन्धलोपे 'उत् श्वि त' इति स्थिते "ओदितश्च" इत्यनेन तकारस्य नत्वे "पूर्वत्राऽसिद्धम्" इति तस्यासिद्धत्वात् "वचिस्वपियजादीनां किति" इति सम्प्रसारणे "सम्प्रसारणाच्च" इति पूर्वरूपे 'उत् शु न' इति जाते "हलः" इत्यनेन दीर्घे "श्वीदितो निष्ठायाम्" इति इडभावे "शश्छोऽटि" इति छत्वे उदः तकारस्य श्चुत्वेन चकारे कृदन्तत्वात् सौ अनुबन्धलोपे सकारस्य रुत्वे विसर्गे 'उच्छूनः' इति।

---

## लघुकौमुद्यां प्रश्नाः।

### १९४६

१ अ-वा-वर्णयोर्बाह्याभ्यन्तरप्रयत्नान् लिखित्वा, "अणुदित्सवर्णस्य चाप्रत्ययः" इति सूत्रस्य हिन्द्यामर्थं प्रयोजनञ्च लिखत। १०

अथवा

"तुल्यास्यप्रयत्नं सवर्णम्", "अणुदित्सवर्णस्ये"ति च सूत्रं किं किं कार्यं कुरुतः।

२ विष्णो-इति, वाक-हरिः, भोस-देवाः, हरिस्-राजते, सस्-शम्भुः, अत्र यथेष्टं त्रयाणां सिद्धिः कर्तव्या। १५

३ रामाय, विश्वपः, सखा, तिसृणाम्, प्रशाम्याम्, यूनः, प्रतीचः, अमुष्मै, सुपुमांसि, एषु स्वेच्छया चतुरः प्रयोगान् संसाध्य, पिधानम्, उदेतोः, इत्यत्र किं किं कार्यमिति लिखत। १८

४ त्रि, बहुश्रेयसी-शब्दयोः आमि, मति, दधि, पिपठिष-शब्दानां ङिविभक्तौ, वह्, तनु, शीङ्, धूञ-धातूनाञ्च लुङि प्रथमपुरुषैकवचने रूपाणि लेख्यानि। २०

५ भवेत्, पचाञ्चक्रुषे, अगोप्ताम्, समङ्क्ष्व, रुन्धः, अतत, अचकथत्, एषु यथेष्टं चतुर्णां सिद्धिं प्रदर्श्य "नेगदे"ति समस्तसूत्रं लिखत। १५

६ अर्वामवत्, जिघत्सति, नरीनृत्यते, द्रवामति, रथेन संचरते, अभाजि, यजति स्म युधिष्ठिरः, एषु केषामपि चतुर्णां साधनं कृत्वा यशस्करी, सन् द्विजः, चिकर्षा, देवित्वा, एषां द्वयोरेव कृत्प्रत्ययार्थप्रदर्शनपूर्वं सिद्धिः कार्या। १५

७ मातुः स्मरति, अध्यात्मम्, निष्कौशाम्बिः, राजन्यः, पटीयान्, मत्सी, एषु विशेषकार्याणि, विशेषसूत्रैर्दर्शनीयानि। १५

८ हस्ति, यवन, श्वशुर, आचार्य-शब्दानां द्वयोरेव कयोश्चित् स्त्रियां प्रथमैकवचने रूपाणि लिखत। २

## लघुकौमुद्यां प्रश्नाः ।

### १९४७

१ (क) च, प-वर्णयोः प्रत्येकं स्थानं बाह्यप्रयत्नम् आभ्यन्तरप्रयत्नञ्च लिखत । ६

(ख) अलोऽन्त्यस्य, ङिति ह्रस्वश्च, हन्तेर्जः, तस्य समूहः, एषु चायाणां सूत्राणां हिन्दीभाषायामर्थान् लिखत । ६

२ कृष्णर्द्धिः, गवाग्रम्, ब्रह्मर्षिः, पतन् मुरारिः, सम्राट्शम्भुः, पुंस्कोकिलः, मनोरथः—एषु केषाञ्चित् पञ्चानां रूपाणां सिद्धिं कुरुत १५

३ रामाणाम्, पितरौ, सखीम्, प्रशाम्याम्, विश्वौहः, अमुना, गिरः, धनूंषि एषु कानिचित् पञ्च रूपाणि साधयत । १५

४ आसीत्, चीयात्, क्रियात्, दुदोह, देहि, जायते, चिकाय, गिलति, तृणेढि, मुषाण—एषु पञ्च रूपाणि साधयत । १५

५ ज्ञपयति, बुभूषति, वाव्रज्यते, पुत्रीयति, निविशते, विरमति, अभाजि, शिष्यः, जनमेजयः, शुष्कः, लवः, लिखित्वा, कटे आस्ते—एषां मध्ये पञ्चसु प्रयोगेषु विशेषसूत्रैर्विशेषकार्याणि प्रदर्शयत । १५

६ उपकृष्णम्, चोरभयम्, परमराजः, चित्रगुः, शिवकेशवौ, गार्ग्यः, पाशुपतम्, कौशाम्बी, त्वदीयः, कुमारी, युवतिः—एषु कांश्चित् पञ्च प्रयोगान् साधयत । १५

७ युष्मच्छब्दस्य सर्वासु विभक्तिषु कृधातोर्लुङि च रूपाणि प्रदर्शयत । १०

---

## लघुकौमुद्यां प्रश्नाः

### १९४८

१ (क) त—इवर्णयोः स्थानं बाह्यप्रयत्नमाभ्यन्तरप्रयत्नञ्च लिखत ६

(ख) आदिरन्त्येन सहेता, कृन्मेजन्तः, ईं च गणः, यङोऽचि च, लट् स्मे, ज्य च—एषु त्रयाणां सूत्राणामर्थान् लिखत। ६

२ गव्यूतिः, प्राच्छति, चक्र्यत्र, उत्थानम्, पटत्सन्तः, नॄँ ᳶ पाहि, शिवोऽर्च्यः। एषु केषाञ्चित् पञ्चानां रूपाणां सिद्धिं कुरुत। १५

३ सर्वेषाम्, नृणाम्, मत्यै, दध्ना, अनड्वान्, मघोनः, उपानत्, ददन्ति—एषु कानिचित् पञ्च रूपाणि साधयत। १५

४ अभूवन्, अगमत्, अचीकमत, अवधीत्, पप्तुः, नर्तिष्यति, सुनोति, उपस्किरति, शिष्टि, कुर्वन्ति—एषु षड् रूपाणि साधयत। १५

५ आतिष्ठिपत्, चिकीर्षति, बोभूयते, कष्टायते, विजयते, अनुकरोति, अलाभि, चेयम्, भिन्नः, जलपाकः, चयः, भोजं भोजम्, त्रिमाय गां ददाति—एषां मध्ये पञ्चसु प्रयोगेषु विशेषसूत्रैर्विशेषकार्याणि प्रदर्शयत। २१

६ उपशरदम्, राजपुरुषः, अर्धचर्म, द्विमूर्धः, पितरौ, दाक्षिः, नड्वलः, आस्माकीनः, शरण्यः, मृद्वी, चन्द्रमुखी, युवतिः—एषु काँश्चित् षट् प्रयोगान् साधयत। १५

७ अदस्-शब्दस्य सर्वलिङ्गेषु सर्वासु विभक्तिषु च रूपाणि प्रदर्श्य क्रीयातोरर्थं लिटि रूपाणि च लिखत। १०

---

## लघुकौमुद्यां प्रश्नाः

### १९४९

१ (क) ख, ह—वर्णयोः स्थानं बाह्यप्रयत्नमाभ्यन्तरप्रयत्नञ्च लिखत । ६

(ख) तुल्यास्यप्रयत्नं सवर्णम्, अव्ययादाप्सुपः, मितां ह्रस्वः, यङो वा, न यदि, तरप्तमपौ घः, प्रज्ञादिभ्यश्च—एषु त्रयाणामर्थौल्लिखत । ६

२ गव्यम्, शिवेहि, विष्णो इति, तल्लयः, तच्छिवः, लक्ष्मीच्छाया, मनोरथः एषु केषाञ्चित् पञ्चानां रूपाणां सिद्धिं कुरुत । १५

३ रामाणाम्, सखा, पितरौ, स्त्रियम्, ज्ञानानि, विश्वौहः, अमुना, अमुष्यै, दीव्यन्ती—एषु कानिचित् पञ्च रूपाणि साधयत । १५

४ भवानि, अगोपीत्, पेचिथ, अवोचत्, नेनिजानि, अदीपि, अधावीत्, असिचत्, हिनस्ति, अतत, व्यष्टभत्, गणयति—एषु षड्रूपाणि साधयत । १५

५ बुभूषति, नरीनृत्यते, पुत्रीयति, निविशते, प्रवहति, भूयते, शिष्यः, पण्डितं मन्यः, लवित्रम्, पत्रः, हित्वा, कटे आस्ते—एषां मध्ये षट्सु प्रयोगेषु विशेषसूत्रैर्विशेषकार्याणि प्रदर्शयत १५

६ पञ्चगङ्गम्, पञ्चगवम्, परमराजः, अन्तर्लोमः, शिवकेशवौ, वैनतेयः, वैयाकरणः, आधिदैविकम्, सार्वभौमः, कुमारी, इन्द्राणी श्वश्रूः एषु कांश्चित् षट् प्रयोगान् साधयत १५

७ 'मघवन्'-शब्दस्य सर्वासु विभक्तिषु रूपाणि प्रदर्श्य, यज-धातोर्लटि लुङि च रूपाणि लिखत । १०

---